॥ ॐ ॥

देव त्वं जगतां नाथंपरमात्मा
दाराः पुत्रा धनं राज्यं सर्व त्वं मायया कृतम्
अतोहं देवदेवेश नाकांक्षेन्यत्प्रसीदं मे
तत्तिष्ठतं मनो नाम त्वयि नान्यत्र मे सदा ॥

अथ आदित्यहृदयम्

ततो युद्धपरिश्रांतम् समरे चिंतया स्थितम् ।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १ ॥

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥ २ ॥

राम राम महाबाहो शृणु गुह्यं सनातनम् ।
येन सर्वानरीन्वत्स समरे विजयिष्यसि ॥ ३ ॥

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपेन्नित्यं अक्षय्यं परमं शिवम् ॥ ४ ॥

सर्वमंगलमांगल्यं सर्वपापप्रणाशनम् ।
चिंताशोकप्रशमनं आयुर्वर्धनमुत्तमम् ॥ ५ ॥

रश्मिमंतं समुद्यंतं देवासुरनमस्कृतम् ।
पूजयस्व विवस्वंतं भास्करं भुवनेश्वरम्॥ ६ ॥

सर्वदेवात्मको ह्येषः तेजस्वी रश्मिभावनः ।
एष देवासुरगणांल्लोकान् पाति गभस्तिभिः॥ ७ ॥

एष ब्रह्मा च विष्णुश्च शिवः स्कंदः प्रजापतिः ।
महेंद्रो  धनदः कालो यमः सोमो ह्यपां पतिः॥ ८ ॥

पितरो वसवः साध्या ह्यश्विनौ मरुतो मनुः ।
वायुर्वह्निः प्रजाप्राणः ऋतुकर्ता प्रभाकरः ॥ ९ ॥

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः॥ १० ॥

हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान् ।
तिमिरोन्मथनः शंभुस्त्वष्टा मार्तांड अंशुमान्॥ ११ ॥

हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः ।
अग्निगर्भोदितेः पुत्रः शंखः शिशिरनाशनः ॥ १२ ॥

व्योमनाथस्तमोभेदी ऋग्यजुःसामपारगः ।
घनवृष्टिरपां मित्रो विंध्यवीथी प्लवंगमः॥ १३ ॥

आतपी मंडली मृत्युः पिंगलः सर्वतापनः ।
कविर्विश्वो महातेजाः रक्तः सर्वभवोद्भवः ॥ १४ ॥

नक्षत्रग्रहताराणामधिपो विश्वभावनः ।
तेजसामपि तेजस्वी द्वादशात्मन्नमोस्तु ते ॥ १५ ॥

नमः पूर्वाय गिरये पश्चिमायाद्रये नमः ।
ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६ ॥

जयाय जयभद्राय हर्यश्वाय नमो नमः ।
नमो नमः सहस्रांशो आदित्याय नमो नमः ॥ १७ ॥

नमः उग्राय वीराय सारंगाय नमो नमः।
नमः पद्मप्रबोधाय मार्तंडाय नमो नमः ॥ १८ ॥

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९ ॥

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २० ॥

तप्तचामीकराभाय वह्नये विश्वकर्मणे ।
नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१ ॥

नाशयत्येष वै भूतं तदेव सृजति प्रभुः ।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२ ॥

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ।
एष एवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥ २३ ॥

वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च ।
यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः ॥ २४ ॥

॥ फलश्रुतिः ॥

एनमापत्सु कृच्छ्रेषु कांतारेषु भयेषु च ।
कीर्तयन् पुरुषः कश्चिन्नावसीदति राघव ॥ २५ ॥

पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ।
एतत् त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ २६ ॥

अस्मिन् क्षणे महाबाहो रावणं त्वं वधिष्यसि ।
एवमुक्त्वा तदागस्त्यो जगाम च यथागतम् ॥ २७ ॥

एतच्छ्रुत्वा महातेजा नष्टशोकोभवत्तदा ।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८ ॥

आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् ।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९ ॥

रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागतम् ।
सर्व यत्नेन महता वधे तस्य धृतोभवत् ॥ ३० ॥

अथ रवि रवदन्निरीक्ष्य रामं
मुदितमनाः परमं प्रहृष्यमाणः ।
निशिचरपतिसंक्षयं विदित्वा
सुरगणमध्यगतो वचस्त्वरेति ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे
वाल्मीकीये आदिकाव्ये युद्धकांडे
आदित्यहृदयं नाम सप्तोत्तरशततमः सर्गः ॥
॥ इति आदित्यहृदयम् ॥